AUM

# SHREE BRAHMA-DHARA

By

SHAIVA-CHARYA SAT-GARU

SHREE LAKSHMANANAD SWAMI

ॐ जुं सः अमृतेश्वरभैरवाय नमः

ॐ 1 = अन्तरालीनतत्त्वौघं चिदानन्दघनं महत्
यत्तत्त्वं शैवधामाख्यं तदोमित्यभिधीयते (1) ॥

जुं 2 = तादृगात्मपरामर्शशालिनी शक्तिरस्य या
देशकालापरिच्छिन्ना सा जुंशब्देनकथ्यते (2) ॥

सः 3 = सिसृक्षोल्लेखनिर्माणशक्तित्रितयनिर्भरा
जगतो येशिताशक्तिः सा स इत्युच्यते स्फुटम् (3) ॥

अमृतेश्वर 4 = स्वशक्त्यभिव्यक्तिमये मोक्षेऽस्यैश्वर्ययोगतः ।
स्वोपासकानाममृतेश्वरत्वं तस्य सुस्फुटम् (4) ॥

5 भैरवाय = नीलहर्षादिभेदेन यद्बाह्याभ्यन्तरं जगत् ।
अहमित्यामृशन्पूर्णो भैरवः समुदाहृतः (5) ।

6 नमः = देहप्राणसुखादीनां न्यग्भावात्कुलसंहतेः
या चिदात्मनि विश्रान्तिर्नमःशब्देन सोच्यते 6.

7 त्रयी सप्तचतुर्युग्मलये त्रितयवर्त्मनि ।
स्थितो यः शक्तिसहितः स जयत्यमृतेश्वरः 7 ॥3

8 आत्मेन्दुधामनि सुगेभनेरशपुत्र-
चित्रां त्रिशूलबिलधामनि सृष्टशक्तिम् । 8.

वैसर्गिके चितिपदेऽप्यथपुण्डरीकां
काञ्चित्परां त्रिकपरां प्रणमामि देवीम् ९ ॥३॥

9 श्रीमत्सदाशिवपदेऽपि महोग्रकाली
भीमोत्कटभ्रुकुटिरेष्यति भङ्गभूमिः ।
इत्याकलय्य परमां स्थितिमेत्य काल-
संकर्षिणीं भगवती हठतोऽधितिष्ठेत् १० ॥

10 तन्मध्ये तु परादेवी दक्षिणे च परापरा
अपरा वामशृङ्गे तु मध्यशृङ्गोर्ध्वतः शृणु
या सा संकर्षिणी काली परातीता व्यवस्थिता ॥

11 कृत्वाधारधरां चमत्कृतिरसप्रोक्षाक्षणक्षालिता-
मात्तैर्मानसतः स्वभावकुसुमैः स्वामोदसंदोहिभिः ।
आनन्दामृतनिर्भरस्वहृदयानर्घार्घपात्रक्रमात्
त्वां देव्या सह देहदेवसदने देवार्चयेऽहर्निशम् 12 ॥
12 नानास्वादरसामिमां त्रिजगतीं हृच्चक्रयन्त्रार्पिता-
मूर्ध्वाधस्तविवेकगौरवभरान्निष्पीड्यनिःष्यन्दितम् ।
यत्संवित्परमामृतं मृतिजराजन्मापहं जृम्भते
तेन त्वां हविषा परेण परमे संतर्पयेऽहर्निशम् 13 ॥

13 कालाग्निरुद्रात्प्रसूतं च तेजो भूरि स्फुटं दीप्ततरं विचिन्त्यम् ।
ऊर्ध्वे स्थिता चन्द्रकला च शान्ता पूर्णामृतानन्दरसेन देवी 14 ॥
14 तदोभयोर्वह्निः विषानुयोगात् तेजश्शशांकौ द्रवितौ च यस्मात् ।
तेजश्शशांकस्फुटमिश्रितत्वाद् भवेत् तदार्कं त्ववताररूपम् 15 ॥

15 परस्परसमाविष्टौ चन्द्रेऽग्नीष्टीटिभे शशी ।
चन्द्रं सृष्टिं विजानीयादग्निः संहार उच्यते ॥
अवतारो रविः प्रोक्तो मध्यस्थः परमेश्वरः ॥ 16

16 ततः सकाशात्प्रभवाप्ययौ स्तो
यस्मादयं विश्वसमग्रभेदः ।
एतच्च विद्वान् विदितार्थभावो
ध्यायेत युक्त्यात्मचिदर्करूपम् 17 ॥

17 द्वारेशा नवरन्ध्रगा हृदयगो वास्तुर्गणेशो महान्
शब्दाद्या गुरवः समीरदशकं त्वाधारशक्त्यात्मकम् ।
चिद्देवोऽथ विमर्शशक्तिसहितः षाड्गुण्यमङ्गावलि-
र्लोकेशाः करणानि यस्य महिमा तं नेत्रनाथं स्तुमः 18॥

18 विगलति भवदौर्गत्यं मोक्षश्री श्रयति हृत्कजं कचति ।
प्रसरति परमानन्दो यत्र तदीशार्चनं जयति ॥२॥ 19

19 अस्तङ्गतवति प्राणे त्वपानेऽभ्युदयोन्मुखे ।
तावत् सा कुम्भकावस्था योगिभिरनुभूयते ॥ 20
20 यथा निमीलने काले प्रपञ्चो नैव दृश्यते ।
तथैवोन्मीलने स्याच्चेदेतद्ध्यानस्य लक्षणम् ॥ 21
21 प्रकाशमाने परमार्थभानौ नश्यत्यविद्यातिमिरे
समस्ते ।
तदा बुधा निर्मलदृष्टयोऽपि किञ्चिन्न पश्यन्ति
भवप्रपञ्चम् ॥ 22

22 प्रनष्टवायुसंचारः पाषाण इव निश्चलः ।
परजीवैक्यधर्मज्ञो योगी योगविदुच्यते ॥ 23
23 ब्रह्मविष्णुमहेशादिदेवता भूतजातयः ।
नाशमेवानुधावन्ति तस्माच्छ्रेयः समभ्यसेत् ॥ 24
24 अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत्-श्वभ्रं वा स्वर्गमेव वा 25 ॥
25 यावन्नैव प्रविशति चरन्मारुतो मध्यमार्गे
यावद्बिन्दुर्न भवति दृढं प्राणवातप्रबन्धात् ।

यावन्नैव सहजसदृशं जायते चैव तत्त्वम्
तावत्सर्वं तदिदमखिलं दम्भमिथ्याप्रलापम् ॥ 26

26 आख्यानं चिद्रसस्यौघं साकारत्वमुपागतम् ।
जगद्रूपतया वन्दे प्रत्यक्षं भैरवं वपुः ॥ 27

27 उज्झित्वात्मसमाधानं ये ध्यायन्त्यन्यदेवताः ।
भिक्षन्ते भूरिवित्तास्ते भिक्षित्वापि बभुक्षिताः 28 ॥

## अवस्थाभेदप्रक्रिया

28 जाग्रत्स्वप्नसुषुप्तान्यतदतीतानि यान्यपि ।
तान्यप्यमुष्यनाथस्य स्वातन्त्र्यलहरीभरः ॥ 29

## प्रमातृभेदप्रक्रिया

29 महामन्त्रेशमन्त्रेशमन्त्राः शिवपुरोगमाः ।
अकलौ सकलश्चेति शिवस्यैव विभूतयः ॥ 30

# अध्वभेदप्रक्रिया

30 बहुशक्तित्वमस्योक्तं शिवस्य यदतो महान् ।
कलातत्त्वपुरार्णाणुः पदादिर्भेदविस्तरः 31 ॥

31 कदाचिच्छक्तियोगेन कर्मणा विद्ययापि वा
ज्ञानधर्मोपदेशेन मन्त्रैर्वा दीक्षयापि वा ।
एवमाद्यैरनेकैश्च प्रकारैः परमेश्वरः
संसारिणोऽनुगृह्णाति विश्वस्य जगतः पतिः ॥ 32

## कृत्यभेदप्रक्रिया

32 सृष्टिस्थितितिरोधान-
संहारानुग्रहादि च ।
तुर्यमित्यपि देवस्य
बहुशक्तित्वजृम्भितम् 33 ॥

33 तस्य शक्तय एवैतास्तिस्रो भान्ति परादिकाः ।
सृष्टौ स्थितौ लये तुर्ये तेनैताः द्वादशोदिताः 34

34 क्रमाभावान्न युगपत्तदभावात्क्रमोऽपि न ।
क्रमाक्रमकथातीतं संवित्तत्वं सुनिर्मलम् 35॥
35 अदीक्षितानां पुरतो नोच्चरेत् शिवसंहिताम् ।
तमाराध्य ततस्तुष्टाद्दीक्षामासाध्य शांकरीम् । 36
36 येन केनाप्युपायेन गुरुमाराध्य भक्तितः ।
तद्दीक्षाक्रमयोगेन शास्त्रार्थं वेत्त्यसौ ततः ॥ 37
37 अभिषेकं समासाध्य यो भवेत् स तु कल्पितः
सन्नप्यशेषपाशौघविनिवर्तनकोविदः 38 ॥

8 संसारमोहनाशाय शब्दबोधो न हि क्षमः ।
न निवर्तेत तिमिरं कदाचिद्दीपवार्तया ॥ 39

9 अभ्यस्य वेदशास्त्राणि सारं ज्ञात्वाथ बुद्धिमान् ।
पलालमिव धान्यार्थी त्यजेच्छास्त्रमशेषतः ॥ 40

10 षड्दर्शनमहाकूपे पतिताः पशवः प्रिये ! ।
न जानन्ति परंतत्त्वं दर्वी पाकरसं यथा ॥ 41

41 यदा तु वैचित्र्यवशाज्जानीयात्तस्य तादृशं
विपरीतप्रवृत्तित्वं ज्ञानं तस्मादुपाहरेत् ।
तं च त्यजेत्पापवृत्तिं भवेत्तु ज्ञानतत्परः ॥ 42
42 यदा किंचिद्ज्ञोऽहं द्विप इव मदान्धः समभवं
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ।
यदा किंचित्किंचिद्बुधजनसकाशादवगतं
तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥ 43

शासनरोधनपालनपाचनयोगात्स सर्वमुपकुरुते ।
तेन पतिः श्रेयोमय एव शिवो नाशिवं किमपि तत्र ॥ 43
ईदृग्रूपं कियदपि रुद्रोपेन्द्रादिषु स्फुरेद्येन ।
तेनावच्छेदनुदे परममहत्पदविशेषणमुपात्तम् ॥ 44
देवो ह्यन्वर्थशास्त्रोक्तैः शब्दैः समुपदिश्यते ।
महाभैरवदेवोऽयं पतिर्यः परमः शिवः ॥ 45
विश्वं बिभर्ति पूरणधारणयोगेन तेन च भ्रियते ।
सविमर्शतया स्वरूपतश्च संसारभीरुहितकृच्च ॥ 46
संसारभीतिजनिताद्रवात्परामर्शतोऽपि हृदि जातः ।
प्रकटीभूतं भवभयविमर्शनं शक्तिपाततो येन ॥ 47

नक्षत्रप्रेरककालतत्त्वसंशोषकारिणो ये च ।
कालग्रासससमाधानरसिकमनःसु तेषु च प्रकटः ॥ 49
संकोचिपशुजनामिये यासां स्वकं स्वकरणदेवीनाम् ।
अन्तर्बहिश्चतुर्विधखेचर्यादिकगणस्यापि ॥ 50
तस्य स्वामी संसारवृत्तिविघटनमहाभीमः ।
भैरव इति गुरुभिरिभैरन्वर्थैः संस्तुतः शास्त्रे ॥ 50

विश्वैकरूपविश्वात्मन् विश्वसर्गादिकारणं ।
परप्रकाशवपुषं स्तुमः स्वच्छन्दभैरवम् ॥ 52
मध्यप्राणनिविष्ट हंसपरमः यो रोमकूपाश्रयः ।
प्राणः सूक्ष्मविमर्शशालिवपुषः सार्धत्रिकोट्यात्मकः ॥
तान्मन्त्रात्मतया विलोमयति यः स्वच्छन्दनाथः परो ।
देवोऽसौ विदधातु भैरववपुस्तेजः परं शाश्वतम् ॥ 53
दुष्करं सुकरीकर्तुं दुःखं सुखयितुं तथा ।
एकवीरास्मृतिर्यस्य तं स्मरामः स्मरद्विषम् ॥ 54
क्षमः कां नापदं हन्तुं कां दातुं संपदं न वा ।
योऽसौ स दयितोऽस्माकं देवदेवो वृषध्वजः ॥ 55

दृष्ट्वा शिष्यं जराग्रस्तं व्याधिभिः परिपीडितम् ।
उत्क्रमय्य ततस्त्वेनं परतत्त्वे नियोजयेत् ॥ 55
सर्वमप्यथवा भोगं मन्यमानो विरूपकम्
उत्क्रमय्य ततस्त्वेनं परतत्त्वे नियोजयेत् ॥ 56
तामाश्रित्योर्ध्वमार्गेण चन्द्रसूर्यावुभावपि ।
सोऽप्युम्मय्यध्वन्यस्तमितः हित्वा ब्रह्माण्डगोचरम् ॥ 57

तदा तस्मिन्महाव्योम्नि प्रलीनशशिभास्करे ।
सौषुप्तपदवन्मूढः प्रबुद्धः स्यादनावृतः ॥ 58
यामवस्थां समालम्ब्य यदयं मम वक्ष्यति ।
तदवश्यं करिष्येऽहमिति संकल्प्य तिष्ठति ॥ 59
यत्रोपरमते चित्तं निरुद्धं योगसेवनात् ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ 60
सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ 61

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥ 62

तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ 63

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ 64

युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।
सुखेन ब्रह्मसंयोगमत्यन्तमधिगच्छति ॥ 65.

विघ्नायुतसहस्रं तु परोत्साहसमन्वितम् ।
प्रहरत्यनिशं जन्तोः सद्धस्त्वभिमुखस्य च ॥ 65

विशेषतो भवाम्बोधिसमुत्तरणकारिणः । 66

रामः किमुच्यते देव ! योऽत्रस्थः स च कः प्रभो !
तस्याभ्यासः कथं नाम ब्रूहि मे परमेश्वर ! 69
(इतिप्रश्नग्रन्थः)

(अत्रोत्तरग्रन्थः)
गतिः स्थानं स्वप्नजाग्रदुन्मेषणनिमेषणे !
धावनं प्लवनं चैव आयासः शक्तिवेदनम् ॥ 70

बुद्धिभेदास्तथाभावाः संज्ञाकर्मान्यनेकशः ।
एतच्चतुर्दशविधं रामं तु परिकीर्तितम् ॥ 73
ऊर्ध्वं त्यक्त्वाधोविशेत् स रामस्थो मध्यदेशगः ॥ 74

---

न मोक्षो नभसः पृष्ठे न पाताले न भूतले ।
सर्वाशासंक्षये चेतः क्षयो मोक्ष इतीर्यते ॥ 75

(इति वेदान्ते)

---

मोक्षस्य नैव किञ्चिद्
धामास्ति न चापि गमनमन्यत्र ।
अज्ञानग्रन्थिभिदा
स्वशक्त्यभिव्यक्तिता मोक्षः ॥ 76

(इति त्रिकागमे)

मोक्षो हि नाम नैवान्यः
स्वरूपप्रथनं हि सः ।
स्वरूपं चात्मनः संवि-
न्नान्यत्तत्र तु या पुनः । 77

क्रियादिकाः शक्तयस्ताः
संविद्रूपाधिकाः नहि
असंविद्रूपतायोगा-
द्धर्मिणश्चानिरूपणात् ॥ 78
(युगलकम्)

परमेश्वरशास्त्रे च
न च काणादिदृष्टिवत् ।
शक्तीनां धर्मरूपाणा-
माश्रयः कोपि कथ्यते ॥ 79

एक एव मनोदेवो जितः सर्वार्थसिद्धिदः ।
अन्यश्च विफलः क्लेशः सर्वेषां तज्जयं विना॥ 80

सोऽपि स्वातन्त्र्यधाम्ना
चेदप्यनिर्मलसंविदाम् ।

अनुग्रहं चिकीर्षुस्त-
द्राविनं विधिमाश्रयेत् ॥ 81

तदर्थमेव चास्यापि परमेश्वररूपिणः ।
तदभ्युपायशास्त्रादिश्रवणाध्ययनादरः ॥ 82

नहि तस्य स्वतन्त्रस्य क्वापि कुत्रापि खण्डना ।
नानिर्मलचित्तःपुंसोऽनुग्रहस्त्वनुपायकः ॥ 83

अयं रसो येन मनागवाप्तः
स्वच्छन्दचेष्टानिरतस्य तस्य ।
समाधियोगव्रतमन्त्रमुद्रा-
जपादिचर्या विषवद्विभाति ॥ 84

तत्त्वमात्मस्थमज्ञात्वा मूढः शास्त्रेषु मुह्यते ।
गोपः कुक्षिगतं छागं कूपे पश्यति दुर्मतिः ॥ 85

बर्हिर्मुखस्य मन्त्रस्य वृत्तयो या प्रकीर्तिताः ।
ता एवान्तर्मुखस्यास्य शक्तयः परिकीर्तिताः ॥ 86

हस्तं हस्तेन संपीड्य
दन्तैर्दन्तांश्च पीडयन् ।
अङ्गान्यङ्गैः समाक्रम्य
जयेदादौ स्वकं मनः ॥ 87

तं ये पश्यन्ति ताद्रूप्यक्रमेणामलसंविदः ।
तेऽपि तद्रूपिणस्तावत्त्यैवास्यानुग्रहात्मता ॥ 88.

पूर्णानन्दस्वभावः
स्वजनहितकृते माययोपात्तकायः ।
कारुण्यादुद्दिधीर्षुर्जनमनवरतं
मोहपङ्के निमग्नम् ॥ 69 67

आविश्यान्तर्वसिष्ठं
बहिरपि कलयन् शिष्यभावं वितेने ।
यः संवादेन शास्त्रामृतजलधि-
ममुं रामचन्द्रं प्रपद्ये ॥ 70 68

(1) अनुपाय

(2) आणवोपाय

(1) गुरोर्वाक्याद्युक्तिप्रचय (2) रचनोन्मार्जनवशात्

(3) शाक्तोपाय

(4) शाम्भवोपाय

(3) समाश्वासाच्छास्त्रंप्रति (4) समुदितोद्वापि कथितात् ।
विलीने शंकाभ्रे हृदयगगनोद्भासिमहसः
प्रभोः सूर्यस्येव स्पृशत चरणान्ध्वान्तजयिनः ॥ 89

अर्थेषु तद्भोगविधौ तदुत्थे
दुःखे सुखे वा, गलिताभिशंकम् ।
अनाविश्रान्तोऽपि निमग्नचित्ता
जानन्ति वृत्तिक्षयसौख्यमन्तः ९० ॥

अनुत्तरेऽभ्युपायोऽत्र ताद्रूप्यादेव वर्णितः ।
ज्वलितेष्वपि दीपेषु घर्मांशुः किं न भासते ॥९१

ततोऽपि परमंज्ञानं उपायादिविवर्जितम् ।
आनन्दशक्तिविश्रान्तमनुत्तरमिहोच्यते ॥९२

प्रज्ञाप्रासादमारुह्य
अशोच्यः शोचतो जनान् ।
भूमिष्ठान्निव शैलस्थः
सर्वान् प्राज्ञोऽनुपश्यति ॥ 93

अविकल्पपथारूढो येन येन पथा विशेत् ।
धरासदाशिवान्तेन तेन तेन शिवीभवेत् ॥ 94

यथास्थितस्तथैवास्व मा गाः बाह्यमथान्तरम् ।
केवलं चिद्विकासेन विकारनिकरान् जहि ॥ 95

संसारजीर्णतरुमूलकलापकल्प
संकल्पसान्तरतया परमार्थवह्नेः ।
स्युर्विस्फुलिंगकणिका अपि चेत्तदन्ते
देदीप्यते विमलबोधहुताशराशिः ॥ 96

शास्त्रविरुद्धाचरणात् कृष्णं ये कर्म विदधते ।
तत्र भीमैर्लौकपुरुषैः पीडयन्ते भोगपर्यन्तम् ॥97
ये सकृदपि परमेशं
शिवमेकाग्रेण चेतसा शरणं ।

यान्ति न ते नरकजुषः

कृष्णं तेषां सुखाल्पतादायि ॥ 98

अस्वतन्त्रस्य कर्तृत्वं नहि जातूपपद्यते ।
वस्तुतः सर्वभावानां कर्तेशानः परः शिवः ॥ 99
तथा च तेषां हेतूनां संयोजनवियोजने ।
नियते शिव एवैकः स्वतन्त्रः कर्तृतामियात् ॥ 100

१०। बहवो गुरवः सान्ति शिष्य वित्तापहारकाः।
दुर्लभोऽयं गुरुर्देवि शिष्य सन्तापहारकः॥

---

